

SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:10, Issue: 12
March 2024, Price Rs.20/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

मार्च् - २०२४ रु. २०/-



## तिरुमल श्रीवेङ्कटेश्वरस्वामिनः प्लवोत्सवः

20-03-2024 तः 24-03-2024 पर्यन्तम्



SIVAPRASAD






22-01-2024 दिनाङ्के अयोध्या नगरे आयोजित 'बालरामस्य विग्रह प्रतिष्ठा' कार्यक्रमे तिरुमल तिरुपति देवस्थानस्य पालकमण्डलि अध्यक्षः श्री भूमन करुणाकर रेड्डि महोदयः भागं गृहीतवन्तः।



16-01-2024 दिनाङ्के तिरुपतिस्थ रामचन्द्र पुष्करिणी मध्ये आयोजित "कोटि हनुमान् चालिसा पारायण" महायज्ञे श्री सीतारामयोः, श्री आञ्जनेय स्वामिनः नीराजनप्रदाने ति.ति.देवस्थानस्य पालकमण्डलि अध्यक्षः श्री भूमन करुणाकर रेड्डि महोदयः भागं गृहीतवान्।



21-01-2024 दिनाङ्के तिरुमल नादनीराजनमण्टपे आयोजित षष्टवार श्रीमद्रामायण अयोध्या काण्ड अखण्डपारायणदृश्यम्।





19-01-2024 दिनाङ्के तिरुमल क्षेत्रे श्रीवारि सदन् - १ तः अयोध्या नगरे 22-01-2024 दिनाङ्के आयोजति बालरामस्य विग्रहप्रतिष्ठाकार्यक्रमार्थं मोदकान् श्री स्वामिनः प्रसादरूपेण प्रेषितदृश्यम्। अस्मिन् चित्रे ति.ति.दे. अतिरिक्त ई.ओ. (एफ्.ए.सि) श्री वीरब्रह्मम् ऐ.ए.एस्., मुख्य पि.आर्.ओ डा॥ टि. रवि अन्य अधिकारिणः च भागं गृहीतवन्तः।



22-01-2024 दिनाङ्के तिरुपति अन्नमाचार्य कलामन्दिरे अयोध्य बालरामस्य विग्रह प्रतिष्ठा सन्दर्भे अन्नमाचार्य प्रकल्प बृन्दैः सह आयोजित अन्नमाचार्यस्य सङ्कीर्तना अखण्ड महायज्ञ कार्यक्रम दृश्यम्।




22-01-2024 दिनाङ्के तिरुमल धर्मगिरि मध्ये वेदविज्ञानपीठेन आयोजित सम्पूर्ण वाल्मीकि रामायणपारायणदृश्यम्।

# गीतामृतम्



श्रीभगवान् उवाच हे अर्जुन!

श्रीभगवानुवाच -

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः।।

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः।।

(भगवद्गीता २.२३-२४)

भावः - हे पार्थ! शस्त्राणि अस्य आत्मानं वेधयितुं न शक्नुवन्ति, अग्निः न दहति, जलं न क्लेदयति स्म, वायुः न शोषयति। छन्तुमशक्यः, दाहयितुयशक्यः क्रेदयितुमशक्यः, शोषपितुमशक्यः अथंशाश्वतः, सर्वव्यापी, स्थाणुरूपः, चलनरहितः, अनादिरयमात्मा।

# सङ्कीर्तनम्



श्री वेङ्कटगिरीशं - रागः - सुरटि - ताळः - आदि।

प।। श्री वेङ्कटगिरीशं आलोकये विनायक तुरगारूढम्

अनुप।। देवेशपूजितभगवन्तं दिनकरकोटि प्रकाशवन्तम्

गोविन्दं नतभूसुरवृन्दं गुरुगुहानन्दं मुकुन्दम्

च।। अलमेलुमङ्गासमेतं अनन्तपद्मनाभम् अतीतम्

कलियुगप्रत्यक्षविभातं कञ्जजादि देवोपेतम्

जलधरसन्निभं सुन्दरगात्रं जलरुहमित्राब्जशत्रुनेत्रम्

कलुषापहगोकर्णक्षेत्रं करुणारस पात्रं चिन्मात्रम्

(अन्नमाचार्यसङ्कीर्तनम्)

# भारतीयसंस्कृतौ महिलानां महत्त्वम्

उपाध्यायान् दश आचार्य आचार्याणां शतं पिता।
सहस्रं तु पितॄन् माता गौरवेणातिरिच्यते।।

''दश उपाध्यायेभ्यः एकः आचार्यः शत आचार्येश्यः पिता, सहस्रेश्य पितृभ्यः माता अधिकतया वन्दनीया। इति मनुधर्मशास्त्र वचनम्। विश्वे येन केनापि देशेन अपि स्त्रीभ्यः न समुचितं स्थानं परं आस्माकं भारतदेशे स्त्रीभ्यः समुचित स्थानं दत्तम्। भारतदेशः स्त्रीमूर्तिः देवतावत्, मातृवत्, भगिनीवत्, गृहिणीवत्, आद्रियते। करुणया, लालित्यं, कर्तव्यदीक्षया पालनं, मातृवत् पोषणं, धर्मपत्नीरूपेण गृहस्थ धर्माचरणं सर्वं केवलं स्त्रीरेव करोति। तदर्थमेव जगत् सृष्टिः सर्वापि तस्याः आधीने वर्तते। तत् कारणादेव सर्वयोषितः श्रेष्ठाः इति इन्द्रः जगन्मातरं अस्तौषीत्।

स्त्रियः कुटुम्बनिर्वहणे प्रधानपात्रं वहन्ति। यज्ञयागादि क्रतवः अपि पत्न्या विना पतिः कर्तमशक्यः इति शास्त्रवचनम्। अतएव रामायणे उत्तरकाण्डे श्रीरामः अश्वमेधयागे स्वर्ण सीता प्रतिमां स्थापयित्वा यज्ञं चकार। अस्माकं ऋषयः स्त्रियं जगन्मातृरूपेण पूजितवन्तः। यत्र नार्यस्तु न पूज्यन्ते तत्र विनाश एव भवति। अस्माकं साहित्ये रामायणं महाभारतमिति द्वौ इतिहासौ भवतः। रामायणे, रावणासुरः स्त्रियं सीतां वञ्चयित्वा अपहृतवान्। तेन कारणेन राक्षस वंशनाशनकारकः बभूव। महाभारते दुर्योधनोऽपि द्रौपद्यादिषु दुष्कृत्यादिकं कृत्वा स्व कुलनाशकः बभूव। ''चिरंजीविन्याः सौभाग्यवत्याः हरिद्राकुङ्कुम शोभितायाः गर्भसुधांम्बुधौ कन्यारत्न जननं'' इति पठयः जातकपत्रिकायाम्। अस्माकं सनातनहैन्दवम्प्रदाये स्त्रीभ्यः विशेष पूज्यता प्रतीयते। 'मातृदेवो भव' इति वेदोक्तिः। सा प्रथमपूजाही इति स्तुवन्ति। अस्माकं पुराणेषु भगवनामोच्चारणे आन्नौ सीतारामः, लक्ष्मीनारायणः गौरीशङ्करः इत्यादिरूपेण स्त्रियः एव नाम आदौ स्वीक्रियते। अतएव भगवत्याः नाम एव गृहते यदा सहस्रं तु पित्रॄन् माता गौरवेण अतिरिच्यते। कन्यापूजा विशेष पर्वरूपेण समाचर्यते। अष्टमी तिथौ समारोह पूर्वकं कन्या पूजा श्रद्धया आचर्यते। अस्मिन् दिने बालाः कन्याः स्वगृहं समायुः विशेष वस्त्राणि धारयित्वा सम्प्रदाय पालकाः गृहसौन्दर्यं वर्धयन्ति। तासां सहोदराणां चिरजीवनं काङ्क्षन्ते। बालकाः गौरवरूपेण कन्यानां पादप्रक्षालनं कुर्वन्ति। षड्रसोपेत भोजनं भोजयन्ति। बालकाः यदा एतादृश संस्कारं आर्जयन्ति तदा तेभ्यः कदापि समाजे अगौरव स्थानं न भवेत्। स्त्रीः भारतीयसंस्कृतौ परमोन्नतस्थानमलंकरोति। अतएव मनुनैव प्रोक्तम् -

तत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।
यत्रैतास्तु न पूज्यन्ते अफलास्तत्राखिलाः क्रियाः।।

अद्य समाजे स्त्रियः गौरवरूपेण न पूज्यन्ते। स्त्रीषु दुष्कृत्यकारिणः काठिन्यरूपेण दण्डनीयाः इति मनुस्मृति वचनम्। भारते स्त्रीः सबला रूपिण्येव समाजस्य स्पूर्तिदात्री भवति। तादृशी पूज्या स्त्रीः सर्वेरपि सहोदर इव माता इव भावनीया। न मातुः परदैवतम्।

।। न मातुः परदैवतम्।।

# मार्च् २०२४

सम्पुटिः-१० सञ्चिका-१२

श्रीशोभकृत्संवत्सरस्य माघकृष्णषष्टी तः
श्रीशोभकृत्संवत्सरस्य फाल्गुणकृष्णषष्टी पर्यन्तम्-१९४४



मुखचित्रम् - श्रीवेङ्कटस्वामिनः प्लवोत्सवः, तिरुमल।

अन्तिमरक्षापुटः - श्रीपद्मावतीदेवी, तिरुचानूरु।

## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९
सम्पादकः,
०८७७ - २२६४३६०

सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -

sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*

तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका





# महाशिवरात्रिः



तेलुगु मूलम्, - श्री भूमन करुणाकररेड्डि,
अध्यक्षः, ति.ति.दे. पालकमण्डली

तिरुपतिक्षेत्रं महापुण्यक्षेत्रेषु मूर्धन्यं सद्विराजते। इदं क्षेत्रम् अगणितमहिम्नः निलयं, पापारण्यकुठारकम्। क्षेत्रमिदं कलियुगे वैकुण्ठधाम इति परिकीर्तितं पुराणेषु। सांप्रतं पर्वतप्रान्तः तिरुमल इति, पर्वतस्य अधोभागः तिरुपतिः इति च व्यवह्रियेते। किन्तु प्राचीनकाले उभयोरपि स्थानयोः तिरुपतिः इत्येव अभिधानम् आसीत्।

तिरुपतिक्षेत्रं हरिहराभेदवत् परिशोभते। पर्वतमूले कपिलतीर्थं वर्तते। तत्तटे कपिलेश्वरः कामाक्षीसहितः विराजते। श्रीवेङ्कटेश्वरसहस्रनामसु ''उपत्यकप्रदेशस्थ -शङ्करध्यातमूर्तये नमः'' इति नामकः मन्त्रः कश्चन विराजते। श्रीवेङ्कटाचल-माहात्म्ये विवाहनिश्चयार्थं प्रस्थितायै वकुलादेव्यै कार्यसिध्यर्थं कामाक्षीसमेतस्य कपिलेश्वरस्य आशिषः प्राप्य आकाशराजराजधानीं नारायणवनं गन्तव्यमिति श्रीनिवासः सूचयति।

श्रीमहाविष्णुः मोक्षप्रदाता, शङ्करः ज्ञानप्रदाता। ज्ञानादेव खलु कैवल्यम्। अतः शिवकेशवयोः अयं सम्बन्धः अस्मिन् क्षेत्रे सुष्ठु प्रतिपादितः।

### वेङ्कटाचलक्षेत्रस्य क्षेत्रपालकः -

वैष्णवक्षेत्रेषु शिवः शैवक्षेत्रेषु विष्णुश्च क्षेत्रपालकत्वेन भवतः इति लोकप्रसिद्धः विषयः। तिरुमलक्षेत्रस्य क्षेत्रपालकः रुद्रः। अस्य सन्निधिः प्रधानदेवालयात् आग्नेयकोणे क्रोशद्वयदूरे विद्यमाने गोगर्भतीर्थे विराजते। तिरुमलक्षेत्रे शिवरात्रिसन्दर्भे क्षेत्रपालकोत्सवं निर्वहन्ति।

माघमासस्य कृष्णपक्षस्य चतुर्दश्यां तिथौ मध्यरात्रिकालः महाशिवरात्रिपर्वकालः। लिङ्ग-स्कान्द-ब्रह्मोत्तरपुराणेषु

शिवरात्रिपर्वमाहात्म्यं उपवर्णितम्। शिवरात्रिसन्दर्भे उपवासदीक्षया शिवलिङ्गाराधनं निर्वर्तयन्ति। शिवरात्रिजागरणं सर्वपापनिवारकं, शिवनामस्मरणं भक्तिमुक्तिप्रदायकम्।

माघकृष्णचतुर्दश्याः मध्यरात्रौ ब्रह्मविष्ण्वोः कलहं व्याजं कृत्वा लिङ्गरूपेण महाशिवः ज्योतिर्लिङ्गरूपेण आविर्बभूव सः आविर्भावकालः महाशिवरात्रिरिति कथ्यते। एतदतिरिच्यापि नित्य-पक्ष-मासादिषु विशेषतया शिवराधनां कुर्वन्ति। यथा-

१. नित्यशिवरात्रिः -नित्यं शिवस्मरणं, शिवाराधनञ्च अत्र क्रियते।

२. पक्षशिवरात्रिः - प्रतिपक्षं चतुर्दश्यां तिथौ शिवाराधनम्, अभिषेकादीनामाचरणम्, उपवासानुष्ठानञ्च अस्य व्रतस्य लक्षणम्।

३. मासशिवरात्रिः - प्रतिमासं कृष्णपक्षे चतुर्दश्यां तिथौ शिवाराधनं, नियमेन शिवपूजनम्, उपवासपूर्वकं शिवनामस्मरणं मासशिवरात्रेः वैशिष्ट्यम्।

४. महाशिवरात्रिः - माघमासस्य कृष्णपक्षे चतुर्दश्यां तिथौ पुराणादिषु उपवर्णितविधानेन व्रताचरणम्, अभिषेकः, जागरणं, शिवनामसङ्कीर्तनम् एवमादि विचाराः महाशिवरात्रिव्रते अन्तर्भवन्ति।

५. योगशिवरात्रिः - मोक्षसाधनार्थं योगविधानेन चित्तं परमशिवे निधाय शिवैक्यस्थितेः संपादनं योगशिवरात्रेः लक्षणम्।



शिवरात्रिसंदर्भे शिवस्वरूपस्य आवाहनार्थं भक्ताः विभूतिं, रुद्राक्षं च धरन्ति। शिवप्रीतिकराणि बिल्वपत्राणि शिवार्चनार्थमुपयुज्यन्ते। तथैव पुराणादिषु शिवानुग्रहसाधनानि बहूनि प्रोक्तानि वर्तन्ते।

द्वादशज्योतिर्लिङ्गदर्शनं मानवजीवनस्य साफल्यसङ्केतत्वेन परिगण्यते। स्वस्य जीवकालावधौ ज्योतिर्लिङ्गदर्शनेन शिवसायुज्यं प्राप्नुवन्ति इति पौराणिकः विश्वासः। एवम् अनन्तकाल प्रवाहे शिवाराधनसंप्रदायः अखण्डतया आचर्यमाणः वर्तते। अखण्डकालप्रवाहसंप्राप्तस्य शिवाराधनसंप्रदायस्य अनुसरणं विधाय कृतार्थाः भवेम।

**संस्कृतानुवादः - एम्.जि.नन्दन् राव्**
**चरवाणी - ८५००५६३०७४**


**SAPTHAGIRI**

**STATEMENT ABOUT OWNERSHIP AND OTHER PARTICULARS ABOUT**

**(MONTHLY)**
**FORM IV**
*See Rule 8*

1. Place of Publication : TIRUPATI
2. Periodicity of its Publication : Monthly
3. Printer's Name : Sri P. Ramaraju, M.A.
   Whether citizen of India : Yes
   Address : S.O.,T.T.D.Press Compound, K.T.Road, Tirupati.
4. Publisher's Name : **Dr. K. Radha Ramana**, M.A.,M.Phil., Ph.D.
   Whether citizen of India : Yes
   Address : Chief Editor Office, T.T.D.Press Compound ,K.T.Road, Tirupati.
5. Editor's Name : **Dr. V.G.Chokkalingam**, M.A., Ph.D.
   Whether citizen of India : Yes
   Address : Chief Editor Office, T.T.D.Press Compound ,K.T.Road, Tirupati.
6. Name and address of individuals who own the News paper and partners or share holders holding more than one percent of the Total Capital } Tirumala Tirupati Devasthanams

*I, K. Radha Ramana, hereby declare that the particulars given above are true to the best of my knowledge and belief.*

TIRUPATI
Date : 29-2-2024

**(Sd.) Dr. K. Radha Ramana**
*Signature of the Publisher*



# कुबेरस्य गर्वभङ्ग


तेलुगुमूलम् - श्री डी.श्रीनिवास दीक्षितुलु
चित्राणि - श्री के.द्वारकानाथः
संस्कृतानुवादः - का. भास्करः
चरवाणी - ८९४३१५०८३३


कुबेरः यक्षाणाम् अधिपतिः। एषः महान् शिवभक्तः। रावणासुरः लङ्कानगरात् कुबेरं बहिश्चकार। ततः सः पलायनं कृत्वा शिवमुद्दिश्य तपः कृतवान्। शिवः प्रत्यक्षो भूत्वा ...




त्रिषु लोकेषु मां विना कोऽपि धनिकः नास्ति इति कुबेरस्य गर्वं जातम्। सः कैलासं गत्वा...















तदनन्तर दिने विनायकाय कुबेरः मृष्ठान्न भोजनं दत्तवान्। विभिन्न प्रकार पाकान् समर्पितवान्
विनायकः खादन् अस्ति। विनायकः ......

ऊ .... परिवेशयतु शीघ्रम्...

आश्चर्यम्... कथं खादति?



अलं विनायक अलम्। तव उदरं विस्फोटयिष्यति

तदर्थमेव उदरं परितः सर्पं वेष्टितवान् कुबेर!



सहस्राणि खादितव्यानि विनायकः एकः एव खादितवान्। तद् दृष्ट्वा...

पाचकाः पाकं कर्तुम् असमर्थाः अभवन्। कुबेरः...














# लघुप्रश्नोत्तरी



तिरुमलतिरुपतिदेवस्थानानि



२०

ऐदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः! प्रतिमासम् इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

१. देवव्रतः कयोः पुत्रः?
२. पाण्डुराजस्य पत्न्यौ के?
३. माद्र्याः पुत्रौ कौ?
४. कः भीष्मस्य स्वच्छन्दमरणवरं दत्तवान्?
५. ब्रह्मर्षयः सत्रयागं कुत्र आयोजितवन्तः?
६. शौनकादि मुनिभ्यः कः महाभारतकथाश्रवणं अकरोत्?
७. महाभारत रचनाकालः कति वत्सराः अभवत्?
८. कुरुवंशस्य मूलपुरुषः कः?
९. दुष्यन्तः कस्य वंशीयः?
१०. दुष्यन्तस्य पिता कः?
११. परीक्षित् महाराजस्य पिता कः?
१२. परीक्षित् महाराजस्य माता कः?
१३. गर्भस्थं परीक्षितं कः रक्षितवान्?
१४. भागवतपुराणे श्रीकृष्णचरितं कुत्र वर्णितम् ?
१५. श्रीकृष्णस्य पितरौ कौ?

| समाधानानि |
|---|
| १. |
| २. |
| ३. |
| ४. |
| ५. |
| ६. |
| ७. |
| ८. |
| ९. |
| १०. |
| ११. |
| १२. |
| १३. |
| १४. |
| १५. |

## नियमावालिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।
२. बालकर्णस्य गुरुः कः? परशुरामःयाम् एव उत्तरं विलिख्य तत्पत्रं The Chief Editor Office, Sapthagiri, T.T.D. Press Compound, K.T.Road, Tirupati 517507, प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः (Xerox) नैव स्वीक्रियन्ते।
३. बालानां पितरः मासपत्रिकाग्रहीतारः (Subsribers) भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।
४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।
५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तवतां त्रयाणां बालानां चयनं DIP द्वारा क्रियते।
६. विजेतॄणां नामानि अग्रिममासीय सप्तगिरि पत्रिकायां प्रचुरितानि भवन्ति।
७. Chief Editor कार्यालयीयकार्यकर्तृपुत्रपुत्रिकाणां च अत्र अवकाशो नास्ति।
८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।
९. उत्तराणि प्रेषयितुम् अन्तिमतिथिः २५.०३.२०२४ अस्ति।

Subscription Number :
Name :
Mother :
Father :
Address :
Phone Number :

# धर्म परिरक्षण सम्मेलनम्

सनातन हैन्दव धर्मस्य परिरक्षण विषये ति.ति.दे. प्रथम स्थाने वर्तते। अस्मिन्, तिरुमल आस्थानमण्टपे दिनत्रयं यावत् (03-02-2024 तः 05-02-2024 पर्यन्तम्) श्री वेङ्कटेश्वर धार्मिक सम्मेलनम् वैभवेन आयोजितम्।

मङ्गळवाद्येषु सम्प्रदायरीत्या प्रथमं श्रीदेवी, भूदेवी सहित श्रीमलयप्पस्वामिनः प्रत्येकपूजाः निर्वहणं कृत्वा, हारतिं दत्वा तदनन्तरं ज्योतिप्रज्वालनेन धार्मिक परिषदः प्रारम्भः जातः। अस्मिन् सन्दर्भे श्रीवेङ्कटेश्वर वेदविश्वविद्यालयस्य वेदपण्डिताः वेदस्वस्तिं कृतवन्तः। अनन्तरं ति.ति.दे धर्मकर्तारः मण्डली अध्यक्षः श्रीभूमन करुणाकर रेड्डि महोदयः प्रारम्भ उपन्यासं दत्तवन्तः। ई.ओ. ए.वि.धर्मारेड्डि कार्यक्रम सन्दर्भे परिचयं कृतवान्। अस्मिन् कार्यक्रमे ति.ति.देवस्थानस्य श्री श्री श्री पेद्दजीयर् (ज्येष्ठ) स्वामी, श्री श्री श्री चिन्नजीयर् (कनिष्ट) स्वामी, तेषां सहपरिषदः प्रति ५७ पीठाधिपतयः स्वामिनः अपि आगतवन्तः। अस्मिन् सन्दर्भे स्वामिनाम् अनुग्रह भाषणानि १५ पृष्ठ तः २२ पृष्ठ पर्यन्तं " सप्तगिरि" पाठकेभ्यः दत्तानि।









श्रीवेङ्कटेश्वर धार्मिक परिषदः समापन कार्यक्रमे तिरुमल श्री श्री श्री पेद्दजीयर् (ज्येष्ठ) स्वामी, श्री श्री श्री चिन्नजीयर् (कनिष्ठ) स्वामिनौ धर्मकर्तारः मण्डलि अध्यक्षः गौ।। श्री भूमन करुणाकर रेड्डि, कार्यनिर्वहणाधिकारी श्री ए.वि. धर्मारेड्डि, ऐ.डि.ई.एस्., ति.ति.दे., सम्युक्त कार्यनिर्वहणाधिकारिणः श्रीमती सदा भार्गवी ऐ.ए.एस्., श्री वी.वीरब्रह्मम्, ऐ.ए.एस्, महोदयाः अन्ये वरिष्ठाः भागं गृहीतवन्तः तद् दृश्यमालिका।



श्रीवेङ्कटेश्वर धार्मिक परिषदः समापन कार्यक्रमस्य दृश्यानि। अस्मिन् ति.ति.दे. धर्मकर्तारः मण्डलि अध्यक्षः ई.ओ, जे.ई.ओ, स्वामिनः च भागं गृहीतवन्तः।




## सनातन हैन्दव धर्मस्य परिरक्षण विषये ति.ति.दे. प्रथम स्थाने वर्तते। अस्मिन्, तिरुमल आस्थानमण्टपे दिनत्रयं यावत् (०३-०२-२०२४ त: ०५-०२-२०२४ पर्यन्तम्) श्री वेङ्कटेश्वर धार्मिक सम्मेलनम् वैभवेन आयोजितम्।



**तिरुमल श्री श्री श्री पेद्दजीयर् स्वामी (ज्येष्ट) -**
देशस्य सर्वेभ्यः प्रदेशिकान्, मठाधीशान् च आमन्त्रयित्वा श्री स्वामिनः चरणयोः धार्मिक सम्मेलनस्य आयोजनम् अतीव आनन्ददायकम् अस्ति।



**तिरुमल श्री श्री श्री चिन्नजीयर् स्वामी (कनिष्ट)-**
एतावता बहुसङ्ख्याकाः स्वामिनः धर्मसम्मेलनेषु भागं गृह्णन्ति इति शुभलक्षणम्। पूर्वयुगेषु यज्ञसंस्कारेण मोक्षः भवति स्म, कलियुगे नामसङ्कीर्तनं कृत्वा एव भगवतः कृपा अवश्यमेव भवति।



**शुश्रूषानन्दमाता -**
बहुकालानन्तरं धार्मिक सम्मेलन निर्वहणं ति.ति.दे निर्वहति। एषः महदानन्दः। अस्य कार्यक्रमे वयमपि भागस्वामिनः अभवाम। महादानन्दः।



**अष्टाक्षरी सम्पत्कुमार रामानुज जीयर् स्वामी, विजयवाडा -**
ति.ति.देवस्थाने बहवः वेद पण्डिताः सन्ति। तेषां सेवाः धर्मप्रचारार्थं विनियोज्याः। सामान्य भक्तैरपि साम्प्रदायिक वस्त्राणि धृत्वा एव दर्शनार्थम् आगन्तव्यम्।



**श्री सस्वरूपानन्दगिरिः - श्री ललितापीठम् श्रीनिवास मङ्गापुरम्-**
तिरुपति नगरात् एव गोविन्द नामस्मरणाय, पवित्रतायै ति.ति.दे. देवस्थानेन कृषिः कर्तव्या।



**श्री विद्या श्रीश तीर्थ स्वामी, व्यासराय मठम् -**
भारतदेशे धर्मसंस्थापना तिरुमल क्षेत्रात् एव भवति। एतानि कार्यक्रमाणि इतोऽपि अधिकतया करिष्यतीति मम विश्वासः।



**श्री शिवानन्दस्वामी, शैवक्षेत्रम्, ताळ्ळपालेम्, गुण्टूरु -**
ति.ति.देवस्थानस्य कार्यक्रमाः ग्रामस्तरं प्राप्तुं व्यापकरूपेण प्रचारिताः भवेयुः। देवस्थानैः, गोशालाः स्थापयित्वा धर्मप्रचारः करणीयः।



**श्री श्री सच्चिदानन्दसरस्वती तपोवनम्, तुनि -**
पुस्तक प्रसाद वितरणं सुदृढं विस्तारं च करणीयम्। ति.ति.देवस्थानेन सर्वत्र भक्ति कार्यक्रमान् वर्धनीयाः।



स्वात्मानन्देन्द्र स्वामी, विशाख शारदा पीठम् -

युवानः धर्मस्य सूक्ष्मतायाः विषये अवगताः भवेयुः। तेषां जीवने धर्मस्य स्थापने च प्रयत्नः करणीयः।



ज्ञानसरस्वती पीठम् - परमानन्द आश्रमः, विजयवाडा -

वसुधैक कुटुम्बस्य आवश्यकताः ज्ञातुं प्रयत्नः करणीयः सर्वैः भगवद्गीता पठनीया। बहूनां गुरुकुलानां निर्माणार्थं ति.ति.देवस्थानेन प्रयत्नः करणीयः।



विश्वयोगी विश्वं स्वामी गुण्टूरु -

सनातनधर्मं जगति नेतुं ति.ति.दे. प्रयतितव्यम्। ति.ति.दे. धार्मिक कार्यक्रमाः अन्तराष्ट्रीयतया सन्ति इति सर्वे वदन्ति।



श्री शिवदर्शनं माता - प्रोद्दुटूरु

सनातन हिन्दूधर्मः सर्वेषु निहितः अस्ति। एतत् बहिः आनेतुम् एतादृशाः धार्मिककार्यक्रमाः आवश्यकाः भवन्ति।



गौरी शङ्कर्, शृङ्गेरी पीठस्य प्रतिनिधिः -

वेद पाठशालायाः स्तरः उन्नतस्थानं भवेत्। अन्य धर्माचरकैः हिन्दू धर्म परिवर्तनार्थं मार्गदर्शिकाः सूचनाः देयाः।



श्री देवनाथ रामानुज जीयर् स्वामी, शंषाबाद् -

तिरुमल दिव्यक्षेत्रे ध्यानमन्दिराणि व्यवस्थापयेयः। श्री स्वामिनः सेवा कार्यक्रमेषु छात्राः अपि भागस्वामिनः करणीयाः।



श्री रामचन्द्र रामानुज जीयर् , भाष्यकार सिद्धान्त पीठम् भीमवरम् -

अस्मिन् समाजे इदानीम् आध्यात्मिकशिक्षा अत्यावश्यकी अस्ति। ति.ति.दे. संस्कृतस्य, वेदानां प्रोत्साहं कुर्वन् अस्ति। तथैव द्रविड वेदस्यापि प्रोत्साहः दातव्यः।



श्री विरजानन्द स्वामी, ब्रह्मंगारि मठम् कडप -

धर्मप्रचारं क्षेत्रस्तरं प्रति नेतव्यम्। भजन मण्डली द्वारा बालकानां कृते भगवद्गीता, संस्कृतयोः शिक्षणं करणीयम्।



श्री स्थित प्रज्ञानन्द सरस्वती स्वामी, उत्तरकाशी -

प्रत्येकं नागरिकं हिन्दूसंस्कृतेः परम्पराणां च सम्मानं कुर्यात्। बालकान् बालल्यादेव सनातन धर्मं प्रति नेतव्यम्।



काञ्चीपुरपीठम् चल्लाविश्वनाथशर्मा -

वेद पाठशालायाः औन्नत्यं भवेत्। अन्य धर्माचरकैः हिन्दूधर्म परिवर्तनार्थं मार्गदर्शिकाः सूचनाः देयाः। पारायणे महिळानां योगदायित्वम् आवश्यकम्।



**श्री परिपूर्णानन्द स्वामी, व्यासाश्रमः, एर्पेडु -**
धर्मप्रचारः दूरस्थेषु क्षेत्रेषु कर्तव्यः। धर्मः एव कारणं यत् भारतं जगतः कृते उदाहरणरूपेण तिष्ठति।



**श्री हरितीर्तानन्द स्वामी नेल्लूरु -**
- श्री भूमनकरुणाकर रेड्डि महोदयः मनुष्येषु धर्मबीजानां रोपणस्य दृढविश्वासः प्रशंसनीयः अस्ति। ति.ति.दे. भक्तैः दत्तानां सम्पत्तीनां रक्षणं दानकार्यार्थं च उपयोगः करणीयः।



**श्री सत्यानन्दभारती, चिदानन्द, गन्नवरम् -**
ति.ति.दे. द्वारा बृहत् प्रमाणेन धार्मिक कार्यक्रमानाम् आयोजनं करणीयम्। सार्वत्रिकं भवेत् न तु राज्ये एव सीमितम्।



**श्रीरम्यानन्द भारती, श्रीशक्ति पीठम्, रायलचेरुवु -**
हिन्दू धर्मःपूर्वं भारते एव सीमितः आसीत् परन्तु अधुना सार्वत्रिकं जातम्। तिरुमल श्रीस्वामिनः मन्दिरं गच्छतां जनानां सङ्ख्या वर्धनात् एतस्य प्रमाणं दृश्यते।



**श्री राघवुलु, विश्वहिन्दूपरिषदः, अन्ताराष्ट्रीय कार्यदर्शी -**
प्रचारकान् सर्वत्र प्रेषयित्वा धर्मप्रचारः करणीयं। बालबालिकासु धार्मिक वर्धनाय प्रत्येकं मण्डलं स्वीकरणीयम्।



**वेदुरुपाक स्वामी, विजयदुर्गापीठम् -**
ति.ति.दे. अध्यक्षत्वेन पूर्वं श्री भूमनकरुणाकर रेड्डि महोदयैः अनेके धार्मिककार्यक्रमाः आयोजिताः। भविष्येऽपि अनेके धार्मिक कार्यक्रमाः एवं प्रकारेण करणीयाः।



**श्रीसुजयनिधितीर्थस्वामी, श्रीपादराजपीठम्, मुळबागळ् -**
ति.ति.दे. दक्षिण भारतदेशे विशिष्ठ स्थाने वर्तते। सनातन धर्मे सर्वे पीठाधिपतयः भागस्वामिनः करणीयाः।



**श्रीमुकुन्दानन्दमहाराज, ज्योर्तिमठम्, उत्तरखण्ड -**
सनातन धर्मः नाम न केवलं मनुष्याणां अपि च पशुपक्ष्यादीनां कृते मर्गः एव भवति। गोमाता विश्वे सर्वमाता इति घोषयेत्।



**श्रीविद्यावल्लभतीर्थस्वामी, कन्नरु मठम्, उडुपि -**
भारते सर्वान् साधुसन्ततिं एकत्र आनयन् ति.ति.दे.महत् कार्यं कृतम् अस्ति। अस्माकं सनातन सम्प्रदाय रक्षणार्थम् अधिकाः उपक्रमाः करणीयाः।



**श्रीमन्नार्गुडि सेन्डलङ्गार शेन्बगमन्नार् जीयर् स्वामी**
- आन्ध्रप्रदेशे तेलङ्गाणादेशे च धार्मिक परिवर्तनानि ति.ति.देवस्थानेन स्वागती - करणीयानि ति.ति.दे. सम्पूर्णे विश्वे घटमानानां हिन्दूधर्मात् अन्य धर्म परिवर्तनानां निरोधः करणीयः।



श्रीअनुपमानन्द महाराजः, रामकृष्णसेवा समिति, कडपा -
करुणाकर रेड्डि महोदयेन धार्मिक मेलने उक्त विषयाः कठोररूपेण कार्यान्विताः भविष्यन्ति इति उक्तं मुदावहम्।



श्री विद्याविजयतीर्थस्वामी, बेङ्गलूरु -
दाससाहित्यस्य प्रचारः सम्यक् प्रचलन् अस्ति। ति.ति.दे. प्रयोजक माध्यमेन बहवः धार्मिक कार्यक्रमाः क्रियन्ते।



श्री कमलानन्दभारतीस्वामी, भुवनेश्वरी पीठम्, गन्नवरम्, विजयवाडा -
ति.ति.दे. सम्पूर्ण विश्वस्य भारतीयानां कृते वरदानम् अस्ति। करुणाकररेड्डि नेतृत्वे दलितगोविन्दम् कार्यक्रमः तेजस्वी रूपेण सम्पन्नः।



श्री रेवती रमणदास, अन्तर्जतीया उपाध्यक्षलु, इस्कान् -
देशे सर्वत्र गोशालाः स्थापनीयाः। गोविन्दनाम संकीर्तनं तिरुमल क्षेत्रे यदा प्रचलन् अस्ति, तथैव तिरुपति इत्यादिषु अन्येषु प्रान्तेषु अपि कर्तव्यम्।



श्री नारायण महाराजः, द्वारका शङ्कराचार्य मठम्, गुजरात् -
हिन्दू सनातन धर्मस्य विस्तृत प्रचारार्थं रक्षणार्थं सर्वेषां पीठानां पीठाधिपतयः एकी करणीयाः।



श्रीवासुदेवानन्दगिरि स्वामी पेद्द पुलिपाक आश्रम, कृष्णमण्डलम् -
गोसंरक्षणार्थं ति.ति.दे. अग्रे आगन्तव्यम्। मातृमूर्तयः स्त्रियाः धार्मिककार्यक्रमेषु भागी करणीयाः।



श्री सौन्दरराजन् रङ्गराजन्, चिलुकूरु बालाजी आलयः हैदाराबाद -
धर्मस्य रक्षणाय भविष्य जनानां कृते प्रसारणाय च इदं सम्मेलनं अतीव उपयोगि भवति। धर्म रक्षणे निम्न वर्गस्य प्राधान्यं दातव्यम्।



श्री सुबुदेन्द्र तीर्थ स्वामी, श्री राघवेन्द्र मठम्, मन्त्रालयम् -
अन्य धर्माणामपि स्वामिसेवायाम् अवसरः दातव्यः। गोविन्दनाम स्मरणं सर्वत्र प्रचलितव्यम्।



शठगोपन् रामानुज जीयर्, श्री विल्लिपुत्तूरु, तमिलनाडु -
अस्माभिः सर्वैः एकीभूय जनानां भेदं दूरीकृत्य स्वधर्मस्य रक्षणं कर्तव्यम्।



श्री विद्याशङ्कर स्वामी, पुष्पगिरि मठम्, कडप मण्डलम् -
सम्प्रदाय परिरक्षणार्थं सर्वे कार्यं करणीयम्। धर्मसम्मेलने ये निर्णयाः कृताः ते कार्यान्विताः भवेयुः।



**श्री विद्या स्वरूपानन्दगिरि स्वामी, शुक ब्रह्मा आश्रमः, श्रीकाळहस्ती -**

श्रीसूक्तं, श्री लक्ष्मी अष्टोत्तरं, धर्मः इत्यादयः विषयाः पुस्तकरूपेण वितरणीयाः। विद्यालयात् सनातन धर्मस्य प्रचारार्थं प्रयत्नाः करणीयाः।



**श्रीसत्यात्म तीर्थ स्वामी, उत्तरादि मठम्, बेङ्गळूरु -**

धर्मपरिरक्षणं तदा एव कर्तुं शक्यते यदा वैदिकरक्षणं क्रियते। शिल्पादि आख्यायिकाः च प्रचारणीयाः।



**श्रीशङ्कर विजयेन्द्र सरस्वती स्वामी, कञ्चिकामकोटि पीठम् -**

उत्तर भारते प्राचीन देवालयेषु अपि धार्मिक कार्यक्रमाः करणीयाः। भक्तैः तिलक धारणं कृत्वा हैन्दव व्याप्तये प्रयतितव्यम्।



**श्रीविद्याधीश तीर्थ स्वामी उत्तरादि मठम्, उडिपि -**

धर्मभिक्षणार्थं विप्रालयेषु एतादृश पाठ्यक्रमः निर्वहनीयः संस्कृत भाषा द्वारा हिन्दू सनातन धर्म व्याप्तिः भविष्यति। तदर्थं सर्वेभ्यः संस्कृतं पठनीयम्।



**श्रीरविशङ्कर गुरुः, बेङ्गळूरु -**

बालबालिनानां धर्मं प्रति मार्गदर्शनस्य समयः आगतः। धर्मस्य परिरक्षणे युवकानां महत्त्वम् अतीव वर्तते।



**श्री विदुशेखर भारती तीर्थ स्वामी, उत्तराधिकारी शृङ्गेरी पीठम् -**

धर्मचिन्तनार्थं तिरुमल क्षेत्रे धर्म सम्मेलनस्य आयोजनं कृत्वा आनन्दः भवति। अहं बाल्यकालात् एव वेदपरिरक्षणार्थं ति.ति.दे. कार्याणि पश्यन् अस्मि।



**श्री विजयदत्तानन्द स्वामी, उत्तराधिकारी, दत्तपीठम्, मैसूरु -**

श्री वेङ्कटेश्वरस्वामी धर्म संरक्षणार्थं तिरुमल क्षेत्रे प्रादुर्भूतः। गोविन्दकोटि लेखन, भक्तानां कृते भगवतः दर्शनस्य विचारः अतीव उत्तमः अस्ति।



**श्री यदुगिरि यतिराज स्वामी, श्री यदुगिरि यतिराज पीठम्, मेल्कोटे -**

ति.ति.दे. अनेके उत्तमाः कार्यक्रमाः क्रियन्ते। आशासे एते कार्यक्रमाः सफलाः भविष्यन्ति इति।



**श्रीवन् शठगोप श्रीरङ्गनाथ यतीन्द्र महादेशिकन् स्वामी, अहोबिल मठम् -**
वेदो रक्षति रक्षितः। वेद पारयणस्य प्राधान्यं दातव्यम्। तथैव वेदपण्डितानां प्रोत्साहनं दातव्यम्।



**श्री ईशप्रिय तीर्थ स्वामी, अदमारु मठम् उडिपि -**
हिन्दू जनैः वेदोपनिषदज्ञानं वर्धयेत्। सर्वेषां शिक्षणस्य महत्त्वस्य विषये अवगतं करणीयम्। तथैव गोसंरक्षणं करणीयम्।



**सिद्धेश्वरानन्द भारती तीर्थ स्वामी मौनस्वामी मठम्, कुर्ताळ पीठाधिपतिः -**
विग्रहाराधन द्वारा ध्यान द्वारा धर्मस्य प्रचारः करणीयः। भारत सदृशे हिन्दूदेशे यत्र ७५ प्रतिशतं जनसङ्ख्या हैन्दवः सन्ति, तेषाम् अभिप्रायानां प्राधान्यं दातव्यम्।



**श्रीमत् परमात्म शेट्टि आदि श्री मधुर कवि वानमामलै जीयर् स्वामी नाङ्गुनेरु, तमिळनाडु -**
सनातन धर्मः सर्वेषां कृते मार्गदर्शकः भवति। पुनरावृत्ति जन्म परिहारार्थं वयं प्रयत्नशीलाः भवितव्याः।



**श्रीसुगुणेन्द्र तीर्थ स्वामी, पुत्तिगे मठम्, उडिपि -**
इतिहास पुराणानि युवकानां सन्मार्ग गन्तुं साहाय्यं कुर्वन्ति। महाभारत रामायण इत्यादि पुस्तकानि युवकानां मार्गनिर्देशनं ददाति।



**श्रीमत् आण्डवन् आश्रमः, श्रीवराह देशिक स्वामी, श्रीरङ्गम्, तमिलनाडु -**
गीताचार्यः गीतायां जीवनस्य उत्तमाः उपायाः ददाति। अतः गीता प्रतिग्रामं नेतव्या। प्रजा सेवा एव माधव सेवा भवति।



**श्रीविश्व प्रसन्न तीर्थ स्वामी पेजावर् मठम् -**
ति.ति.दे. दास साहित्य परियोजना द्वारा भक्तिकार्यक्रमाः सम्यक् प्रचलन्ति। एते युवकैः धर्मानुष्ठाने अत्युत्साहशीलैः भाव्यम्।



**श्री विद्येन्द्र तीर्थ स्वामी, चित्तापूर् मठम्, कर्णाटक -**
धर्मो रक्षति रक्षितः। समाजस्य सेवां कृत्वा वयं पुण्यं प्राप्नुमः। हिन्दू सनातन धर्मस्य प्रचारः सर्वत्र करणीयः।



**श्री एम्बेरुमन्नार् जीयर् स्वामी, आळ्वार् तिरुनगरी, तमिळनाडु -**
सर्वैः अस्माभिः संस्कृती सम्प्रदायापरिरक्षणं कर्तव्यम्। अस्माकं सनातन धर्मस्य वैश्विक रूपेण प्रसारणाय एतादृशानि सम्मेलनानि अतीव महत्त्वपूर्णानि सन्ति। एतेन विश्वस्य सर्वेषां मानवानां जीवितं उद्धर्तुं शक्यते।



**श्री सदाशिव आश्रम स्वामी, शृङ्गेरी ब्रह्मानन्द मठम्, वाराणीसि -**
श्री विष्णुसहस्रनामपारायणम्, संस्कृत सुभाषितानां विशेषाध्यापनं करणीयम्। पाश्चात्य संस्कृतेः विकासं निवारयितुं प्रयतितव्यम्।



**श्री वेदवर्धन स्वामी, उडिपि पीठम् -**
बालानाम् ईश्वरस्य विषये अवगतं कर्तुं प्रत्येकस्मिन् ग्रामे सप्ताहे एकवारं प्रवचनानि, प्रार्थनामुद्दिश्य च अवगाहना दातव्या।



**श्री सुविद्येन्द्र तीर्थ स्वामी, राघवेन्द्र मठम्, बेङ्ळूरु -**
वेदपरिरक्षणार्थं ति.ति.दे प्रयतितव्यम्। वेदपरिरक्षणं एव धर्म परिरक्षणम्। गोसंरक्षणायाः आवश्यकता अस्ति।



**श्री परवकोट्टै चिन्न आण्डवन् श्री श्रीनिवास गोपाल महादेशिकन् स्वामी, पाण्डरीक पुर आश्रमः श्रीरङ्गम् -**
कळाशालासु छात्राणां कृते नैतिकप्रतियोगितानाम् आयोजनं कृत्वा अस्माभिः स्वपरम्पराः निर्वहणीयाः।

तिरुमल अस्थानमण्डपे त्रिदिवसीयं श्रीवेङ्कटेश्वरधर्मसम्मेलनं सोमवासरे समाप्तम्। ति.ति.दे. पालकमण्डलस्य अध्यक्षः भूमनकरुणाकर रेड्डि महोदयेन अस्मिन् सम्मेलने मठाधीशानां निर्देशानुसारं निर्णयानां विषये अन्तिमे दिने मीडिया - माध्यमेन सूचितम्।

अस्मिन् सन्दर्भे वदन् अध्यक्षः अवदत् यत् १९३३ तमे वर्षे श्रीवेङ्कटेश्वरस्वामी - सनातनधर्मस्य दिव्यवैभवं विश्वे प्रवर्धयितुं तिरुमलतिरुपति - देवस्थानानि अस्तित्वं प्राप्तवन्तः। श्रीवेङ्कटेश्वरस्वामिनः वैभवं दशदिशासु प्रसारयितुं तेलुगु, तमिल, कन्नड, हिन्दीभाषासु श्रीवेङ्कटेश्वर - भक्ति छानल् स्थापना कृता अस्ति।

## जनवरि २०२४ लघुप्रश्नोत्तरी समाधानानि



| | |
|---|---|
| १.श्रावण | ९. ६ |
| २.राघवेन्द्रतीर्थाः | १०.कठोपनिषदि |
| ३.दशमस्कन्धस्य | ११.सुधामः |
| ४.तमिलनाडु | १२.वललः |
| ५.स्वामिपुष्करिणी | १३.सैरन्ध्री |
| ६.गुरुबलादि | १४.भीष्म पर्वे |
| ७. १६ | १५.विभीषणः |
| ८.विश्वामित्रः | |

# श्री वेङ्कटेश्वर धार्मिक सम्मेलनस्य सङ्कल्पाः

1. ये हिन्दूधर्मे सम्मिलितुमिच्छन्ति ते पवित्रजल सम्प्रोक्षण प्रक्रियाम् आचरन्तु इति निर्णयः अभवत्।
2. सर्वत्र पुराणप्रचारं करणीयम् इति निर्णयः अभवत्।
3. तिरुपति नगरे पवित्रवातावरणं निर्मातव्यम् इति निर्णयः अभवत्।
4. मतान्तरीकरण प्रयत्ननिवारणाय एकतायाः भावः करणीयः इति निर्णयः अभवत्।
5. देवालयानां परिरक्षणं, निर्माणं च करणीयमिति निर्णय कृतः।
6. गोसंरक्षणाय पदानि ग्रहीतव्यानि इति निर्णयः अभवत्।
7. वेदशास्त्र विद्याव्याप्ति संरक्षणार्थम् आवश्यक कार्याणि कर्तुं निर्णयः कृतः।
8. सार्वत्रिक धर्माचारपरम्पराणां प्रसारः संरक्षणं च करणीयमिति निर्णयः स्वीकृतः।
9. मातृमूर्तिषु धर्मनिष्ठायाः प्रवर्तनार्थं कार्यक्रमाः करणीयाः इति निश्चयः अभवत्।
10. युवानां मध्ये धर्मप्रीतिं, धर्मासक्तिं च वर्धयितुं कार्याणि करणीयानि इति निर्णयः स्वीकृतः।
11. जीववैविध्य परिरक्षणार्थं कार्याणि करणीयानि इति निर्णयः कृतेः।
12. विविधसेवा, सत्सङ्ग, भजन मण्डलादि समूहव्यवस्थासु सुदृढीकरणाय निर्माणः करणीयः इति निर्णयः स्वीकृतः।
13. जनशक्ति निर्माणाय अधिकाधिकजनानां धर्मशिक्षणं दातुं निर्णयः अभवत्।
14. बृहत् प्रमाणेन आध्यत्मिक प्रशिक्षणकार्यक्रमाणाम् आयोजनं कर्तुं निर्णयः अभवत्।
15. द्रविडवेदस्य विकासाय योजनाः सज्जीकर्तुं निर्णयः अभवत्।
16. विद्यालयस्य छात्राणां कृते धार्मिककार्यक्रमाः युक्तयः च आयोजयितुं निर्णयः अभवत्।
17. तेलुगु संस्कृत भाषायोः बालक बालिकानां, युवती युवकानां कौशलं वर्धयितुं निर्णयःअभवत्।
18. सामाजिकमाध्यमेन हिन्दूधर्मस्य प्रचाररय प्रसारः करणीयः इति सङ्कल्पः अभवत्।
19. सर्वाः धार्मिक संस्थाः एकीकृताः भवेयुः।

एतादृशानां धार्मिक सम्मेलनानां आयोजनार्थं ति.ति.दे. सह सहकार्यं कर्तव्यम् इति निर्णयः अभवत्।

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.

२६-०१-२०२४ तिरुपति ति.ति.दे. परिपालना भवन प्राङ्गणे आयोजित 75 गणतन्त्र उत्सवे मुख्य अतिथि रूपेण भागं गृहीतः ति.ति.दे. पालकमण्डलि अध्यक्षः श्री भूमन करुणाकर रेड्डि महोदयः। अस्मिन् कार्यक्रमे राष्ट्रध्वजं उत्थापयित्वा भाषणं दत्तवान् ति.ति.दे. ई.ओ. श्री ए.वि.धर्मारेड्डि महोदयः। अस्मिन् ति.ति.दे. जे.ई.ओ. श्रीमति सदा भार्गवी, ऐ.ए.एस्., श्री वीरब्रह्मम्, ऐ.ए.एस्, सि.वि.एस्.ओ. श्री नरसिंह किशोर्. ऐ.पि.एस्., महोदयाः अन्ये उन्नताधिकारिणः उद्योगिनः च भागं गृहीतवन्तः।















